॥ नृसिंहस्तोत्रम् ॥

श्री गणेशाय नमः ।
ब्रह्मोवाच ।
नतोऽस्म्यनन्ताय दुरन्तशक्तये विचित्रवीर्याय पवित्रकर्मणे ।
विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया सन्दधतेऽव्ययात्मने ॥ १॥

श्रीरुद्र उवाच ।
कोपकालो युगान्तस्ते हतोऽयमसुरोऽल्पकः ।
तत्सुतं पाह्युपसृतं भक्तं ते भक्तवत्सल ॥ २॥

इन्द्र उवाच ।
प्रत्यानीताः परम भवता त्रायतां नः स्वभागा
दैत्याक्रान्तं हृदयकमलं त्वद्गृहं प्रत्यबोधि ।
कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते
मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम् ॥ ३॥

ऋषय ऊचुः ।
त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं ससर्ज ।
तद्विप्रलुप्तममुनाद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः ॥ ४॥

पितर ऊचुः ।
श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबत्तिलाम्बु ।
तस्योदरान्नखविदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिल धर्मगोप्त्रे ॥ ५॥

सिद्धा ऊचुः ।
यो नो गतिं योगसिद्धामसाधुरहारषीद्योगतपोबलेन ।
नानादर्पं तं नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥ ६॥

विद्याधरा ऊचुः ।
विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः ।
स येन संख्ये पशुबद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम् ॥ ७॥

नागा ऊचुः ।
येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः ।
तद्वक्षःपाटनेनासां दत्तानन्द नमोऽस्तु ते ॥ ८॥

मनव ऊचुः ।

मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः ।
भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किङ्करान् ॥ ९॥

प्रजापतय ऊचुः ।
प्रजेशा वयं ते परेशाभिसृष्टा न येन प्रजा वै सृजामो निषिद्धाः ।
स एष त्वया भिन्नवक्षानुशेते जगन्मङ्गलं सत्त्वमूर्तेऽवहारः ॥ १०॥

गन्धर्वा ऊचुः ।
वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः ।
स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ११॥

चारणा ऊचुः ।
हरे तवांघ्रिपङ्कजं भवापवर्गमाश्रिताः ।
यदेव साधु हृच्छयस्त्वयाऽसुरः समापितः ॥ १२॥

यक्षा ऊचुः ।
वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह दितिसुतेन प्रापिता वाहकत्वम् ।
स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पञ्चतां पञ्चविंशः ॥ १३॥

किम्पुरुषा ऊचुः ।
वयं किम्पुरुषास्त्वं तु महापुरुष ईश्वर ।
अयं कुपुरुषो नष्टो धिक्कृतः साधुभिर्यदा ॥ १४॥

वैतालिका ऊचुः ।
सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे ।
यस्तां व्यनैषीद्भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथामयः ॥ १५॥

किन्नरा ऊचुः ।
वयमीश किन्नरगणास्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः ।
भवता हरे स वृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव ॥ १६॥

विष्णुपार्षदा ऊचुः ।
अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म ।
सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः ॥ १७॥

॥ इति श्रीमद्भागवतान्तर्गते सप्तमस्कन्धेऽष्टमध्याये नृसिंहस्तोत्रं सम्पूर्णम् ॥

॥ नृसिंहस्तोत्र ॥

श्री गणेशाय नमः ।
सुरासुरशिरोरत्नकान्तिविच्छुरिताङ्घ्रये ।
नमस्त्रिभुवनेशाय हरये सिंहरूपिणे ॥ १॥

शत्रोः प्राणानिलास्तत्र वयं दश जयोऽत्र कः ।
इति कोपादिवाताम्राः पान्तु वो नृहरेर्नखाः ॥ २॥

प्रोज्ज्वलज्वलनज्वालाविकटोरुसटाछटः ।
श्वासक्षिप्तकुलक्ष्माभृत्पातु वो नरकेसरी ॥ ३॥

व्याधूतकेसरसटाविकरालवक्त्रं
हस्ताग्रविस्फुरितशङ्खगदासिचक्रम् ।
आविष्कृतं सपदि येन नृसिंहरूपं
नारायणं तमपि विश्वसृजं नमामि ॥ ४॥

दैत्यास्थिपञ्जरविदारणलब्धरन्ध्र
रक्ताम्बुनिर्जरसरिद्घनजातपङ्का ।
बालेन्दुकोटिकुटिलाः शुकचञ्चुभासो
रक्षन्तु सिंहवपुषो नखरा हरेर्वः ॥ ५॥

दिश्यात्सुखं नरहविर्भुवनैकवीरो
यस्याहवे दितिसुतोद्दलनोद्यतस्य ।
क्रोधोद्यतं मुखमवेक्षितुमक्षमत्वं
जानेऽभवन्निजनखेष्वपि यन्नतास्ते ॥ ६॥

॥ इति नृसिंहस्तोत्रम् ॥

॥ नृसिंहस्तोत्रम् गरुडपुराणान्र्गतम् ॥

सूत उवाच ।
नारसिंहस्तुतिं वक्ष्ये शिवोक्तं शौनकाधुना ।
पूर्वं मातृगणाः सर्वे शङ्करं वाक्यमब्रुवन् ॥ १॥

भगवन्भक्षयिष्यामः सदेवासुरमानुषम् ।
त्वत्प्रसादाज्जगत्सर्वं तदनुज्ञातुमर्हसि ॥ २॥

शङ्करौवाच ।
भवतीभिः प्रजाः सर्वा रक्षणीया न संशयः ।
तस्माड्वोरतरप्रायं मनः शीघ्रं निवर्त्यताम् ॥ ३॥

इत्येवं शङ्करेणोक्तमनादृत्य तु तद्वचः ।
भक्षयामासुरव्यग्रास्त्रैलोक्यं सचराचरम् ॥ ४॥

त्रैलोक्ये भक्ष्यमाणे तु तदा मातृगणेन वै ।
नृसिंहरूपिणं देवं प्रदध्यौ भगवाञ्छिवः ॥ ५॥

अनादिनिधनं देवं सर्वभूतभवोद्भवम् ।
विद्युज्जिह्वं महादंष्ट्रं स्फुरत्केसरमालिनम् ॥ ६॥

रत्नाङ्गदं समुकुटं हेमकेसरभूषितम् ।
खोणिसूत्रेण महता काञ्चनेन विराजितम् ॥ ७॥

नीलोत्पलदलश्यामं रत्ननूपुरभूषितम् ।
तेजसाक्रान्तसकलब्रह्माण्डोदरमण्डपम् ॥ ८॥

आवर्तसदृशाकारैः संयुक्तं देहरोमभिः ।
सर्वपुष्पैर्योजिताञ्च धारयंश्च महास्त्रजम् ॥ ९॥

स ध्यातमात्रो भगवान्प्रददौ तस्य दर्शनम् ।
यादृशेन रूपेण ध्यातो रुद्रैस्तु भक्तितः ॥ १०॥

तादृशेनैव रूपेण दुर्निरीक्ष्येण दैवतैः ।
प्रणिपत्य तु देवेशं तदा तुष्टाव शङ्करः ॥ ११॥

शङ्कर उवाच ।

नमस्तेऽस्त जगन्नाथ नरसिंहवपुर्धर ।
दैत्येश्वरेन्द्रसंहारिनखशुक्तिविराजित ॥ १२॥

नखमण्डलसभिन्नहेमपिङ्गलविग्रह ।
नमोऽस्तु पद्मनाभाय शोभनाय जगद्गुरो ।
कल्पान्ताम्भोदनिर्घोष सूर्यकोटिसमप्रभ ॥ १३॥

सहस्रयमसंत्रास सहस्रेन्द्रपराक्रम ।
हसस्त्रधनदस्फीत सहस्रचरणात्मक ॥ १४॥

सहस्रचन्दप्रतिम ! सहस्रांशुहरिक्रम ।
सहस्ररुद्रतेजस्क सहस्रब्रह्मसंस्तुत ॥ १५॥

सहस्ररुद्रसंजप्त सहस्राक्षनिरीक्षण ।
सहस्रजन्ममथन सहस्रबन्धनमोचन ॥ १६॥

सहस्रवायुवेगाक्ष सहस्राज्ञकृपाकर ।
स्तुत्वैवं देवदेवेशं नृसिंहवपुषं हरिम् ।
विज्ञापयामास पुनर्विनयावनतः शिवः ॥ १७॥

अन्धकस्य विनाशाय या सृष्टा मातरो मया ।
अनादृत्य तु मद्वाक्यं भक्ष्यन्त्वद्भुताः प्रजाः ॥ १८॥

सृष्ट्वा ताश्च न शक्तोऽहं संहर्तुमपराजितः ।
पूर्वं कृत्वा कथं तासां विनाशमभिरोचये ॥ १९॥

एवमुक्तः स रुद्रेण नरसिहवपुर्हरिः ।
सहस्रहेवीर्जिह्वाग्रात्तदा वागीश्वरो हरिः ॥ २०॥

तथा सुरगणान्सर्वान्रौद्रान्मातृगणान्विभुः ।
संहृत्य जगतः शर्म कृत्वा चान्तर्दधे हरिः ॥ २१॥

नारसिंहमिदं स्तोत्रं यः पठेन्नियतेन्द्रियः ।
मनोरथप्रदस्तस्य रुद्रस्येव न संशयः ॥ २२॥

ध्यायेन्नृसिंहं तरुणार्कनेत्रं सिदाम्बुजातं ज्वलिताग्निवत्क्रम् ।
अनादिमध्यान्तमज पुराणं परापरेशं जगतां निधानम् ॥ २३॥

जपेदिदं सन्ततदुःखजालं जहाति नीहारमिवांशुमाली ।
समातृवर्गस्य करोति मूर्तिं यदा तदा तिष्ठति तत्समीपे ॥ २४॥

देवेश्वरस्यापि नृसिंहमूर्तेः पूजां विधातुं त्रिपुरान्तकारी ।
प्रसाद्य तं देववरं स लब्ध्वा अव्याज्जगन्मातृगणेभ्य एव च ॥ २५॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे
नृसिंहस्तोत्रं नामैकत्रिंशदुत्तरद्विशततमोऽध्यायः ।